स्तामसो रैवत इति मन्वन्तराधिपतयः[1] ॥२८॥ एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादश परिवत्सराणामव्याहताखिलपुरुषकारसारसम्भृतदोर्दण्डयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्याश्चानुदिनमेधमानप्रमोद[2]प्रसरणयौषिण्य[3]व्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिः पराभूयमानविवेक[4] इवानवबुध्यमान इव महामना बुभुजे ॥ २९ ॥

यावदवभासयति[5] सुरगिरिमनुपरिक्रामन् भगवानादित्यो वसुधातलमर्धेनैव प्रतपत्यर्धेनावच्छादयति तदा हि भगवदुपासनोपचितातिपुरुषप्रभावस्तदनभिनन्दन् समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणिमनुपर्यक्रामद् द्वितीय इव पतङ्गः ॥ ३० ॥ ये वा उ ह तद्रथचरणनेमिकृतपरिखातास्ते सप्त[6] सिन्धव आसन् यत एव कृताः सप्त भुवो द्वीपाः ॥ ३१ ॥ जम्बूप्लक्षशाल्मलिकुशक्रौञ्चशाकपुष्करसंज्ञास्तेषां परिमाणं पूर्वस्मात्पूर्वस्मादुत्तर उत्तरो यथासंख्यं द्विगुणमानेन[7] बहिः समन्तत उपक्लृप्ताः ॥ ३२ ॥ क्षारोदेक्षुरसोदसुरोदघृतोदक्षीरोददधिमण्डोदशुद्धोदाः सप्त जलधयः सप्त द्वीपपरिखा[8] इवाभ्यन्तरद्वीपसमाना एकैकश्येन[9] यथानुपूर्वं सप्तस्वपि बहिर्द्वीपेषु पृथक्[10]परित उपकल्पितास्तेषु[11] जम्ब्वादिषु बर्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञ[12]बाहु[13]हिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान् यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिं विदधे ॥ ३३ ॥ दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद् देवयानी नाम काव्यसुता ॥ ३४ ॥

नैवंविधः पुरुषकार उरुक्रमस्य
पुंसां तदङ्घ्रिरजसा जितषड्गुणानाम् ।
चित्रं विदूरविगतः सकृदाददीत[14]
यन्नामधेयमधुना स[15] जहाति बन्धम् ॥३५॥

स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह ॥३६॥ अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिन्द्रियैरविद्यारचितविषमविषयान्धकूपे तदलमलममुष्या वनिताया विनोदमृगं मां धिग्धिगिति गर्हयाञ्चकार ॥ ३७ ॥ परदेवताप्रसादाधिगतात्मप्रत्यवमर्शेनानु[16]प्रवृत्तेभ्यः पुत्रेभ्य इमां यथादायं विभज्य[17] भुक्तभोगां च महिषीं मृतकमिव सहमहाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार ॥ ३८ ॥

तस्य ह वा एते श्लोकाः—

प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम् ।
यो नेमिनिम्नैरकरोच्छायां घ्नन् सप्त वारिधीन् ॥३९॥
भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः ।
सीमा च भूतनिर्वृत्त्यै द्वीपे द्वीपे विभागशः ॥४०॥
भौमं दिव्यं मानुषं च महित्वं कर्मयोगजम् ।
यश्चक्रे निरयौपम्यं पुरुषानुजनप्रियः ॥४१॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
पञ्चमस्कन्धे प्रियव्रतविजये[18] प्रथमोऽध्यायः ॥ १ ॥

१. प्रा० पा०—मन्वन्तराधिपतयः सभक्तियोगानुभावेन । २. प्रा० पा०—प्रमोदमोदप्रसरण० । ३. प्रा० पा०—यौषण्यव्रीडाप्रमोदित० । ४. प्रा० पा०—विवेको नावबुध्यमा० । ५. प्रा० पा०—यदेवाभासयति । ६. प्रा० पा०—सप्त सप्त सिन्ध० । ७. प्रा० पा०—द्विगुणेन बहिः समन्ततः । ८. प्रा० पा०—द्वीपरिखाभ्यन्तरे द्वीप० । ९. प्रा० पा०—एकैकस्येव । १०. प्रा० पा०—पृथक् परिधय उपकल्पिता० । ११. प्रा० पा०—तेषु बर्हिष्मतीपति० । १२. प्रा० पा०—वाह० । १३. प्रा०पा०—यथासंख्यकमेकैकस्मिन्नेकमेवाधि० । १४. प्रा०पा०—सुकृदाददीत । १५. प्रा०पा०—सहजातितत्त्वम् । १६. प्रा० पा०—प्रत्यवमर्षोऽनुपरिनिवृत्त-स्वपुत्रे० । १७. प्रा० पा०—विभज्य भोगं च । १८. प्राचीन प्रतिमें 'प्रियव्रतविजये'—इतना अंश नहीं है ।

# अथ द्वितीयोऽध्यायः

*श्रीशुक उवाच*[1]

एवं पितरि सम्प्रवृत्ते[2] तदनुशासने वर्तमान आग्नीध्रो[3] जम्बूद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥ १ ॥ स च कदाचित्पितृलोककामः[4] सुरवरवनिताक्रीडाचलद्रोण्यां भगवन्तं विश्वसृजां पतिमाभृतपरिचर्योपकरण आत्मैकाग्र्येण तपस्व्याराधयाम्बभूव ॥ २ ॥ तदुपलभ्य भगवानादिपुरुषः सदसि गायन्तीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥३॥ सा च तदाश्रमोपवनमतिरमणीयं विविधनिबिडविटपिविटप[5]निकरसंश्लिष्टपुरटलतारूढस्थलविहङ्ग[6]मिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारण्डवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥४॥

तस्याः सुललितगमनपदविन्यासगतिविलासायाश्चानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुलयुगल[7]मीषद्विकचय्य[8] व्यचष्ट ॥५॥ तामेवाविदूरे[9] मधुकरीमिव सुमनस[10] उपजिघ्रन्तीं दिविजमनुजमनो[11]नयनाह्लाददुघैर्गतिविहारव्रीडाविनयावलोकसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरं निजमुख[12]विगलितामृतासवसहासभाषणामोदमदान्धमधुकरनिकरोपरोधेन द्रुतपदविन्यासेन[13] वल्गुस्पन्दनस्तनकलशकबरभाररशनां देवीं तदवलोकनेन विवृतावसरस्य भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच ॥ ६ ॥

का त्वं चिकीर्षसि च किं मुनिवर्य शैले[14]
मायासि कापि भगवत्परदेवतायाः ।
विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे
किं वा मृगान्मृगयसे विपिने प्रमत्तान् ॥ ७ ॥

बाणाविमौ भगवतः शतपत्रपत्रौ
शान्तावपुङ्खरुचिरावतितिग्मदन्तौ ।
कस्मै युयुङ्क्षसि वने विचरन्न विद्मः
क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ८ ॥

शिष्या इमे भगवतः परितः पठन्ति
गायन्ति साम सरहस्यमजस्रमीशम् ।
युष्मच्छिखाविलुलिताः सुमनोऽभिवृष्टीः
सर्वे भजन्त्यृषिगणा इव वेदशाखाः ॥ ९ ॥

वाचं परं चरणपञ्जरतित्तिरीणां
ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम् ।
लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे
यस्यामलातपरिधिः क्व च वल्कलं ते ॥ १० ॥

किं सम्भृतं रुचिरयोर्द्विज शृङ्गयोस्ते
मध्ये कृशो वहसि यत्र दृशिः श्रिता[15] मे ।
पङ्कोऽरुणः सुरभिरात्मविषाण ईदृग्
येनाश्रमं सुभग मे सुरभीकरोषि[16] ॥ ११ ॥

लोकं प्रदर्शय सुहृत्तम तावकं मे
यत्रत्य इत्थमुरसावयवावपूर्वौ ।
अस्मद्विधस्य मनउन्नयनौ[17] बिभर्ति
बह्वद्भुतं सरसराससुधादि[18] वक्त्रे ॥ १२ ॥

का वाऽऽत्मवृत्तिरदनाद्धविरङ्ग वाति
विष्णोः कलास्यनिमिषोन्मकरौ च कर्णौ ।
उद्विग्नमीनयुगलं द्विजपङ्क्तिशोचिरासन्नभृङ्गनिकरं सर इन्मुखं ते ॥ १३ ॥

१. प्राचीन प्रतिमें 'श्रीशुक उवाच'—इतना अंश नहीं है । २. प्राचीन प्रतिमें 'संप्रवृत्ते'—इतना अंश खण्डित है । ३. प्रा० पा०—अग्निध्रो । ४. प्राचीन प्रतिमें 'पितृलोककामः ······' से आरम्भकर 'सदसि गायन्तीं' पर्यन्त अंश नहीं है । ५. प्रा० पा०—विटपिनिकटपुरटलता० । ६. प्रा० पा०—विहग० । ७. प्राचीन प्रतिमें 'युगल' यह पाठ नहीं है । ८. प्रा० पा०—मीषद्विहस्य । ९. प्रा० पा०—तामेव दूरे । १०. प्राचीन प्रतिमें 'सुमनस' यह पाठ खण्डित है । ११. प्राचीन प्रतिमें 'मनो' यह पाठ नहीं है । १२. प्रा० पा०—निजमुखभाषणामोदमदा० । १३. प्रा० पा०—द्रुतपदन्यासेन । १४. प्रा० पा०—मुनिवर्य शीले । १५. प्रा० पा०—स्तृता मे । १६. प्रा० पा०—सुरभिं करोषि । १७. प्रा० पा०—उन्नयनैर्बिभर्ति । १८. प्रा० पा०—स्मरसराससुधादि ।

योऽसौ त्वया करसरोजहतः पतङ्गो
दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी मे[1]।
मुक्तं न ते मारसि वक्रजटावरूथं
कष्टोऽनिलो हरति लम्पट एष नीवीम्॥१४॥
रूपं तपोधन तपश्चरतां तपोघ्नं
ह्येतत्तु केन तपसा भवतोपलब्धम्[2]।
चर्तुं तपोऽर्हसि मया सह मित्र मह्यं
किं वा प्रसीदति स वै भवभावनो मे[3]॥१५॥
न त्वां त्यजामि दयितं[4] द्विजदेवदत्तं
यस्मिन्मनो दृगपि नो न वियाति लग्नम्।
मां चारुशृङ्ग्यर्हसि नेतुमनुव्रतं ते
चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः॥१६॥

श्रीशुक[5] उवाच

इति ललनानुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुधमतिरधिसभाजयामास॥१७॥ सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयः[6]श्रियौदार्येण पराक्षिप्तमनास्तेन[7] सहायुतायुत[8]परिवत्सरोपलक्षणं कालं[9] जम्बूद्वीपपतिना भौमस्वर्ग[10]भोगान् बुभुजे॥१८॥ तस्यामु ह वा आत्मजान्[11] स राजवर्य[12] आग्नीध्रो नाभिकिम्पुरुषहरिवर्षेलावृत[13]रम्यकहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान्नव पुत्रानजनयत्॥१९॥

सा सूत्वाथ सुतान्नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे॥२०॥ आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहननबलोपेताः पित्रा विभक्ता आत्मतुल्यनामानि यथा[14]भागं जम्बूद्वीपवर्षाणि बुभुजुः॥२१॥ आग्नीध्रो राजातृप्तः कामानामप्सरसमेवानुदिनमधिमन्य[15]मानस्तस्याः सलोकतां श्रुतिभिरवारुन्ध यत्र पितरो मादयन्ते[16]॥२२॥ सम्परेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लतां रम्यां[17] श्यामां नारीं भद्रां देववीतिमिति[18]संज्ञा[19] नवोदवहन्॥२३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे[20]
आग्नीध्रवर्णनं नाम द्वितीयोऽध्यायः॥२॥

# अथ तृतीयोऽध्यायः

श्रीशुक उवाच[21]

नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवन्तं यज्ञपुरुषमवहितात्मायजत[22]॥१॥ तस्य ह वाव[23] श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमन्त्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रेतार्थ[24]विधित्सया गृहीतहृदयो हृदयङ्गमं मनोनयनानन्दनावयवाभिराममाविश्चकार॥२॥ अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपिशकौशेयाम्बरधरमुरसि विलसच्छ्री-

१. प्रा० पा०—ते। २. प्रा० पा०—भवतेह लब्धम्। ३. प्रा० पा०—भावनोऽसौ। ४. प्रा० पा०—दयितां। ५. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है। ६. प्रा० पा०—रूपविद्यावयः। ७. प्राचीन प्रतिमें 'ते' यह पाठ खण्डित है। ८. प्राचीन प्रतिमें 'यु' यह पाठ खण्डित है। ९. प्राचीन प्रतिमें 'कालं' यह पाठ खण्डित है। १०. प्रा० पा०—भूमि०। ११. प्राचीन प्रतिमें 'जान्' यह पाठ खण्डित है। १२. प्रा० पा०—राजवर्य। १३. प्राचीन प्रतिमें 'वृतरम्यकहिरण्मय…' से आरम्भकर 'आत्मतुल्यनामानि' पर्यन्त अंश खण्डित है। १४. प्रा० पा०—यथाविभागं। १५. प्रा० पा०—मधिगम्यमान०। १६. प्रा० पा०—मोदयन्ते। १७. प्रा० पा०—रामां नारीं। १८. प्राचीन प्रतिमें 'मिति' यह पाठ नहीं है। १९. प्रा० पा०—संज्ञा अवहन्। २०. प्रा० पा०—पञ्चमे स्कन्धे द्वितीयोऽध्यायः। २१. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है। २२. प्राचीन प्रतिमें 'मव' यह पाठ खण्डित है। २३. प्रा० पा०—तस्य ह वावेति। २४. प्रा० पा०—जनाभिप्रायार्थ०।

वत्सललामं दरवरवनरुहवनमालाच्छूर्यमृतमणिगदादिभिरुपलक्षितं स्फुटकिरणप्रवरमुकुटकुण्डलकटककटिसूत्रहारकेयूरनूपुराद्यङ्गभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः ॥ ३ ॥

[1]ऋत्विज ऊचुः

अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमो नमइत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान् प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य[2] परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभी रूपनिरूपणम् ॥ ४ ॥ सकलजननिकायवृजिननिरसनशिवतमप्रवरगुणगणैकदेशकथनादृते ॥ ५ ॥ परिजनानुरागविरचितशबलसंशब्दसलिलसित[4]किसलयतुलसिकादूर्वाङ्कुरैरपि सम्भृतया सपर्यया किल परम परितुष्यसि ।६।

अथानयापि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे ।।७।। आत्मन एवानुसवनमञ्जसाव्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किन्तु नाथाशिष आशासानानामेतदभिसंराधनमात्रं भवितुमर्हति ।। ८ ।। तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परम[10]परमपुरुष प्रकर्षकरुणया स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन् स्वयं नापचित एवेतरवदिहोपलक्षितः ।। ९ ।। अथायमेव वरो ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत् ।। १० ।।

असङ्गनिशितज्ञानानलविधूताशेष[11]मलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरि[12]गुणितगुणगण परममङ्गलायनगुणगणकथनोऽसि ।। ११ ।। अथ कथञ्चित्स्खलनक्षुत्पतन[13]जृम्भणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वर[14]मरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवन्तु ।। १२ ।।

किञ्चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भवन्तमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ।।१३।। को वा इह[15] तेऽपराजितोऽपराजितया मायया[16]नवसितपदव्यानावृतमतिर्विषयविषरयानावृतप्रकृतिरनुपासितमहच्चरणः ।। १४ ।। यदु[17] ह वाव तव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मन्दानां नस्तद्यद्देवहेलनं देवदेवार्हसि साम्येन सर्वान्[18] प्रतिबोद्धुमविदुषाम् ।।१५।।

[19]श्रीशुक उवाच

इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधरा[20]भिवादिताभिवन्दितचरणः सदयमिदमाह ।१६।

[21]श्रीभगवानुवाच

अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्यात्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न [22]मृषा भवितुमर्हति ममैव हि मुखं यद् द्विजदेवकुलम् ।।१७।। तत आग्नीध्रीये[23]ऽशकलयावनरिष्याम्यात्मतुल्यमनुपलभमानः ।।१८।।

[24]श्रीशुक उवाच

इति निशामयन्त्या मेरुदेव्याः पतिमभिधायान्तर्दधे भगवान् ।।१९।। बर्हिषि तस्मिन्नेव विष्णुदत्त

१. प्राचीन प्रतिमें 'ऋत्विज ऊचुः' यह पाठ नहीं है । २. प्राचीन प्रतिमें 'ईश्वरस्य' यह पाठ नहीं है। ३. प्रा० पा०—सबलसंशब्दितसलिल० । ४. प्राचीन प्रतिमें 'सित' यह पाठ नहीं है । ५. प्रा० पा०—तुलसी० । ६. प्रा० पा०—सम्भूतया । ७. प्रा० पा०—तव । ८. प्रा० पा०—सवनमव्यतिरेकेण । ९. प्राचीन प्रतिमें 'परम' यह पाठ नहीं है । १०. प्राचीन प्रतिमें 'परम' यह पाठ नहीं है । ११. नानलविशेषाशेषमलानां । १२. प्रा० पा०—परिगणित० । १३. प्रा० पा०—पतनपरिजृम्भण० । १४. प्रा० पा०—जरामरण० । १५. प्रा० पा०—इह तेऽपराजितया । १६. प्रा० पा०—विषरयान्नृतप्रकृति० । १७. प्रा० पा०—यदिह वाव पुनरदभ्र० । १८. प्रा० पा०—सर्वात्मन् । १९. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है । २०. प्रा० पा०—वर्षवराभि० । २१. प्राचीन प्रतिमें 'श्रीभगवानुवाच' यह पाठ नहीं है । २२. प्रा० पा०—वृथा । २३. प्रा० पा०—ध्रीये स्वकलया । २४. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है ।

भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान्दर्शयितुकामो वार्त[1]-रशनानां श्रमणानामृषीणामूर्ध्वमन्थिनां शुक्लया तनुवावततार ॥२०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे नाभिचरिते ऋषभावतारो नाम तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

*श्रीशुक[2] उवाच*

अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं [3]साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणो[4] देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥ तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन चौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदं नाम चकार ॥ २ ॥

तस्यै[5] हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोग[6]मायया स्ववर्षमजनाभं नामाभ्यवर्षत् ॥ ३ ॥ नाभिस्तु यथाभिलषितं सुप्रजस्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकसंधर्मं[7] भगवन्तं पुराणपुरुषं मायाविलसितमतिर्वत्स तातेति सानुरागमुपलालयन् परां निर्वृतिमुपगतः ॥ ४ ॥

विदितानुरागमापौरप्रकृति जनपदो राजा नाभिरात्मजं समयसेतुरक्षायामभिषिच्य ब्राह्मणेषूपनिधाय सह[8] मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवन्तं वासुदेवमुपासीनः कालेन[9] तन्महिमानमवाप ॥ ५ ॥

यस्य[10] ह पाण्डवेय श्लोकावुदाहरन्ति—

को[11] नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ।
अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ ६ ॥
ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मङ्गलपूजिताः ।
यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥

अथ[12] ह भगवानृषभदेवः[13] स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयन्त्यामिन्द्रदत्तायामुभयलक्षणं कर्म समाम्नायाम्नात[14]मभियुञ्जन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ८ ॥ [15]येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद्येनेदं वर्षं भारतमिति व्यपदिशन्ति ॥ ९ ॥ तमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इन्द्रस्पृग्विदर्भः कीकट इति नव नवतिप्रधानाः ॥ १० ॥

कविर्हरिरन्तरिक्षः प्रबुद्धः पिप्पलायनः ।
आविर्होत्रोऽथ द्रुमिल[16]श्चमसः करभाजनः ॥११॥

इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं[17] वसुदेवनारदसंवादमुपशमायन[18]मुपरिष्टाद्वर्णयिष्यामः ॥ १२ ॥ यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महा-

१. प्रा० पा०—वाताशनानां । २. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है । ३. प्रा० पा०—सौम्योपशम० । ४. प्रा० पा०—ब्राह्मणदेवता० । ५. प्रा० पा०—यस्य ही० । ६. प्रा० पा०—प्रेममायया वर्षमजनाभं । ७. प्रा० पा०—नरलोकसाधर्म्यं । ८. प्रा० पा०—सह देव्या । ९. प्रा० पा०—काले तन्महिमा० । १०. प्रा० पा०—यत्र । ११. प्रा० पा०—कस्तत्कर्म । १२. प्राचीन प्रतिमें 'अथ ह' यह पाठ नहीं है । १३. प्रा० पा०—भगवानृषभः स्व० । १४. प्राचीन प्रतिमें 'म्नात' यह पाठ खण्डित है । १५. प्रा० पा०—एषां । १६. प्रा० पा०—द्रविडश्चमसः । १७. प्राचीन प्रतिमें 'भगवन्महिमोपबृंहितं' यह पाठ नहीं है । १८. प्रा० पा०—मुपशमेन समुपरिष्टाद्व० ।

शालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा[1] ब्राह्मणा बभूवुः ॥ १३ ॥

भगवानृषभसंज्ञ[2] आत्मतन्त्रः स्वयं नित्यनिवृत्तानर्थपरम्परः केवलानन्दानुभव[3] ईश्वर एव विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचरणेनोपशिक्षयन्नतद्विदां सम उपशान्तो मैत्रः कारुणिको धर्मार्थयशःप्रजानन्दामृतावरोधेन गृहेषु लोकं[4] नियमयत् ॥ १४ ॥ यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः ॥ १५ ॥ यद्यपि स्वविदितं सकलधर्मं[5] ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १६ ॥ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ॥ १७ ॥ भगवतर्षभेण[6] परिरक्ष्यमाण एतस्मिन् वर्षे न कश्चन पुरुषो वाञ्छत्यविद्यमानमिवात्मनोऽन्यस्मात्कथञ्चन किमपि कर्हिचिदवेक्षते[7] भर्तर्यनुसवनं विजृम्भित[8]स्नेहातिशयमन्तरेण ॥ १८ ॥ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयन्तीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयन्त्रितानप्युपशिक्षयन्निति होवाच ॥ १९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

*ऋषभ उवाच*

नायं देहो देहभाजां नृलोके
कष्टान् कामानर्हते विड्भुजां ये ।
तपो दिव्यं पुत्रका[10] येन सत्त्वं
शुद्ध्येद्यस्माद् ब्रह्मसौख्यं त्वनन्तम्[11] ॥ १ ॥

महत्सेवां[12] द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये ॥ २ ॥

ये वा मयीशे कृतसौहृदार्था
जनेषु देहम्भरवार्तिकेषु ।
गृहेषु जायात्मजरा[13]तिमत्सु
न प्रीतियुक्ता यावदर्थाश्च लोके ॥ ३ ॥

नूनं प्रमत्तः कुरुते[14] विकर्म
यदिन्द्रियप्रीतय आपृणोति ।
न साधु मन्ये यत आत्मनोऽय-
मसन्नपि क्लेशद आस[15] देहः ॥ ४ ॥

पराभवस्तावदबोधजातो
यावन्न जिज्ञासत आत्मतत्त्वम् ।
यावत्क्रियास्तावदिदं मनो वै
कर्मात्मकं येन शरीरबन्धः ॥ ५ ॥

एवं[16] मनः कर्मवशं प्रयुङ्क्ते
अविद्ययाऽऽत्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे
न मुच्यते देहयोगेन तावत् ॥ ६ ॥

यदा न पश्यत्ययथा गुणेहां
स्वार्थे प्रमत्तः सहसा विपश्चित् ।
गतस्मृतिर्विन्दति तत्र तापा-
नासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥

१. प्रा० पा०—कर्मशुद्धा । २. प्रा० पा०—भगवान्सर्वज्ञ आत्म० । ३. प्रा० पा०—केवल आनन्दा० । ४. प्रा० पा०—लोकानयमयत् । ५. प्रा० पा०—सकलधर्माधर्मं ब्राह्मं । ६. प्रा० पा०—भगवता ऋषभेण । ७. प्रा० पा०—प्रदपेक्षते । ८. प्रा० पा०—सवनं जृम्भितस्नेहा० । ९. प्रा० पा०—प्रणयमयसु० । १०. प्राचीन प्रतिमें 'पुत्रका' यह पाठ खण्डित है । ११. प्रा० पा०—ह्यनन्तम् । १२. प्रा० पा०—महात्मनां । १३. प्राचीन प्रतिमें 'रा' यह पाठ खण्डित है । १४. प्रा० पा०—कुरुते कर्म दीनोऽयमिन्द्रि० । १५. प्रा० पा०—एष । १६. प्रा० पा०—एनं मनः ।

पुंसः स्त्रिया मिथुनीभावमेतं
तयोर्मिथो हृदयग्रन्थिमाहुः ।
अतो गृहक्षेत्रसुताप्तवित्तै-
र्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥
यदा मनो[1]हृदयग्रन्थिरस्य
कर्मानुबद्धो दृढ आश्लथेत ।
तदा जनः सम्परि[2]वर्ततेऽस्माद्
मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥
हंसे[3] गुरौ मयि भक्त्यानुवृत्त्या[4]
वितृष्णया द्वन्द्वतितिक्षया च ।
सर्वत्र जन्तोर्व्यसनावगत्या
जिज्ञासया[5] तपसेहानिवृत्त्या ॥१०॥
मत्कर्मभिर्मत्कथया च नित्यं
मद्देवसङ्गाद् गुणकीर्तनान्मे ।
निर्वैरसाम्योपशमेन पुत्रा
जिहासया देहगेहात्मबुद्धेः ॥११॥
अध्यात्मयोगेन विविक्तसेवया
प्राणेन्द्रि[6]यात्माभिजयेन सध्र्यक् ।
सच्छ्रद्धया ब्रह्मचर्येण शश्वद्
असम्प्रमादेन यमेन वाचाम् ॥१२॥
सर्वत्र मद्भावविचक्षणेन
ज्ञानेन विज्ञान[7]विराजितेन ।
योगेन धृत्युद्यमसत्त्वयुक्तो
लिङ्गं व्यपोहेत्कुशलोऽहमाख्यम् ॥१३॥
कर्माशयं हृदय[8]ग्रन्थिबन्ध[9]-
मविद्ययाऽऽसादितमप्रमत्तः ।
अनेन योगेन यथोपदेशं
सम्यग्व्यपोह्योपरमेत योगात् ॥१४॥
पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा
मल्लोककामो मदनुग्रहार्थः ।

इत्थं विमन्युरनुशिष्यादतज्ज्ञान्
न योजयेत्कर्मसु कर्ममूढान्[10] ।
कं[11] योजयन्मनुजोऽर्थं लभेत
निपातयन्नष्टदृशं हि[12] गर्ते ॥१५॥
लोकः स्वयं श्रेयसि नष्टदृष्टि-
र्योऽर्थान् समीहेत निकामकामः ।
अन्योन्यवैरः सुखलेश[13]हेतो-
रनन्तदुःखं च न वेद मूढः ॥१६॥
कस्तं स्वयं तदभिज्ञो विपश्चिद्
अविद्यायामन्तरे वर्तमानम् ।
दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं
प्रयोजयेदुत्पथगं यथान्धम् ॥१७॥
गुरुर्न स स्यात्स्वजनो न स स्यात्
पिता न स स्याज्जननी न सा स्यात् ।
दैवं[14] न तत्स्यान्न पतिश्च स स्या-
न्न मोचयेद्यः समुपेतमृत्युम् ॥१८॥
इदं शरीरं मम दुर्विभाव्यं
सत्त्वं[15] हि मे हृदयं यत्र धर्मः ।
पृष्ठे कृतो मे यदधर्म आराद्
अतो हि मामृषभं प्राहुरार्याः ॥१९॥
तस्माद्भवन्तो हृदयेन जाताः
सर्वे महीयांसममुं सनाभम् ।
अक्लिष्टबुद्ध्या भरतं भजध्वं
शुश्रूषणं तद्भरणं प्रजानाम् ॥२०॥
भूतेषु वीरुद्भ्य उदुत्तमा ये
सरीसृपास्तेषु स[16]बोधनिष्ठाः ।
ततो मनुष्याः प्रमथास्त[17]तोऽपि
गन्धर्वसिद्धा विबुधानुगा ये ॥२१॥
देवासुरेभ्यो मघवत्प्रधाना
दक्षादयो ब्रह्मसुता[18]स्तु तेषाम् ।

१. प्रा० पा०—यदात्मनो । २. प्रा० पा०—सम्प्रतिवर्त्तते । ३. प्रा० पा०—हरौ गुरौ मयि । ४. प्रा० पा०—भक्तयानुवृद्धया । ५. प्रा० पा०—जिज्ञासया । ६. प्राचीन प्रतिमें 'न्द्रि' इतना अंश खण्डित है । ७. प्रा० पा०—विज्ञानविस्फारितेन । ८. प्राचीन प्रतिमें 'हृदय' इतना अंश खण्डित है । ९. प्रा० पा०—विध्वंसविद्यया । १०. प्राचीन प्रतिमें 'मूढान्' यह अंश खण्डित है । ११. प्राचीन प्रतिमें 'कं योजयन्' से 'दृशं हि गर्ते' पर्यन्त अंश नहीं है । १२. प्राचीन प्रतिमें 'नष्टदृष्टिर्योऽर्थान्' यह अंश खण्डित है । १३. प्राचीन प्रतिमें 'लेशहेतोर' यह पाठ खण्डित है । १४. प्राचीन प्रतिमें 'दैवं' इतना अंश खण्डित है । १५. प्रा० पा०—तत्त्वं । १६. प्रा० पा०—निबोधनिष्ठाः । १७. प्रा० पा०—प्रमथास्तत्रापि । १८. प्रा० पा०—सुता हि तेषाम् ।

भवः परः सोऽथ विरिञ्चवीर्यः
स मत्परोऽहं द्विजदेवदेवः ॥२२॥

न ब्राह्मणैस्तुलये भूतमन्यत्
पश्यामि विप्राः किमतः परं तु।
यस्मिन्नृभिः प्रहुतं श्रद्धयाह-
मश्नामि कामं न तथाग्निहोत्रे ॥२३॥

धृता तनूरुशती मे पुराणी
येनेह सत्त्वं परमं पवित्रम्।
शमो दमः सत्यमनुग्रहश्च
तपस्तितिक्षानुभवश्च यत्र ॥२४॥

मत्तोऽप्यनन्तात्परतः परस्मात्
स्वर्गापवर्गाधिपतेर्न किञ्चित्।
येषां किमु स्यादितरेण तेषा-
मकिञ्चनानां मयि भक्तिभाजाम् ॥२५॥

सर्वाणि मद्धिष्ण्यतया भवद्भि-
श्चराणि भूतानि सुता ध्रुवाणि।
सम्भावितव्यानि पदे पदे वो
विविक्तदृग्भिस्तदु हार्हणं मे ॥२६॥

मनोवचोदृक्करणेहितस्य
साक्षात्कृतं मे परिबर्हणं हि।
विना पुमान् येन महाविमोहात्
कृतान्तपाशान्न विमोक्तुमीशेत् ॥२७॥

*श्रीशुक उवाच*

एवमनुशास्यात्मजान् स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ॥२८॥ जडान्धमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥२९॥ तत्र तत्र पुरग्रामाकरखेटवाटखर्वटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन् देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वादविखण्डितमनाः पृथिवीमेकचरः परिबभ्राम ॥३०॥ अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुन्दरस्वभावहाससुमुखो नवनलिनदलायमानशिशिरतारारुणायतनयनरुचिरः सदृशसुभगकपोलकर्णकण्ठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागवलम्बमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत ॥ ३१ ॥

यर्हि वाव स भगवान् लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म चेष्टमान उच्चरित आदिग्धोद्देशः ॥ ३२ ॥ तस्य ह यः पुरीषसुरभिसौगन्ध्यवायुस्तं देशं दशयोजनं समन्तात् सुरभिं चकार ॥ ३३ ॥ एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काकमृगगोचरितः पिबति खादत्यवमेहति स्म ॥३४॥ इति नानायोगचर्याचरणो भगवान् कैवल्यपतिर्ऋषभोऽविरतपरममहानन्दानुभव आत्मनि सर्वेषां भूतानामात्मभूते

१. प्रा० पा०—परं यत् । २. प्रा० पा०—भूत्या । ३. प्रा० पा०— दृग्भिस्तदिहार्पणं मे । ४. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है । ५. प्राचीन प्रतिमें 'ए' यह खण्डित है । ६. प्रा० पा०—मदगज० । ७. प्रा० पा०—बाहंसयुगल० । ८. प्रा० पा०—शिशिरचार्वरुणायत० । ९. प्रा० पा०—जटिलालक० । १०. प्रा० पा०—प्रतिक्रियायां। ११. प्राचीन प्रतिमें 'हदति' यह पाठ नहीं है। १२. वायुस्तान्देशान् दशयोजनान् समन्तात्सुरभींश्चकार। १३. प्रा० पा०—काकमृगगोवच्चरति पिबत्यवमेहति स्म ।

भगवति वासुदेव आत्मनोऽव्यवधानानन्तरोदरभावेन सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवान्तर्धानपरकायप्रवेश[1]दूरग्रहणादीनि यदृच्छयोपगतानि नाञ्जसा नृप हृदयेनाभ्यनन्दत् ॥३५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे ऋषभदेवानुचरिते पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः

*राजोवाच*

**न नूनं भगव[2] आत्मारामाणां योगसमीरितज्ञानावभर्जित[3]कर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हन्ति यदृच्छयोपगतानि ॥ १ ॥**

*ऋषिरुवाच*

**सत्यमुक्तं किन्त्विह वा एके[4] न मनसोऽद्धा[5] विश्रम्भमनवस्थानस्य[6] शठकिरात इव सङ्गच्छन्ते[7] ॥ २ ॥ तथा चोक्तम्—**

**न कुर्यात्कर्हिचित्सख्यं मनसि ह्यनवस्थिते ।**
**यद्विश्रम्भाच्चिराच्चीर्णं चस्कन्द तप ऐश्वरम् ॥ ३ ॥**
**नित्यं ददाति कामस्यच्छिद्रं तमनु येऽरयः ।**
**योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥**
**कामो मन्युर्मदो लोभः शोकमोहभयादयः ।**
**कर्मबन्धश्च यन्मूलः स्वीकुर्यात्को नु[8] तद् बुधः ॥ ५ ॥**

**अथैवमखिललोकपालललामोऽपि[9] विलक्षणैर्जड[10]वदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां साम्परायविधिमनुशिक्षयन् स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थान्तरभावेना[11]न्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥६॥ तस्य ह वा एवं मुक्तलिङ्गस्य भगवत ऋषभस्य योगमायावासनया[12] देह इमां जगतीमभिमानाभासेन संक्रममाणः कोङ्क[13]वेङ्ककुटकान्दक्षिणकर्णाटकान्देशान् यदृच्छयोपगतः कुटकाचलोपवन आस्यकृताश्म[14]कवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ ७ ॥ अथ समीरवेगविधूतवेणुविकर्षण[15]जातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥८॥**

**यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां[16] राजार्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाखण्डमसमञ्जसं निजमनीषया मन्दः सम्प्रवर्तयिष्यते ॥ ९॥ येन ह वाव[17] कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्नानानाचमनाशौचकेशोल्लुञ्चनादीनि कलिना धर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुष[18]लोकविदूषकाः प्रायेण भविष्यन्ति ॥ १० ॥ ते[19] च ह्यर्वाक्तनया निजलोकयात्रयान्धपरम्परयाऽऽश्वस्ता[20]स्तमस्यन्धे स्वयमेव[21] प्रपतिष्यन्ति[22] ॥ ११ ॥**

---

१. प्रा० पा०—परकायावेशदूर० । २. प्रा० पा०—भगवन्नात्मरामा० । ३. प्रा० पा०—ज्ञानावर्जित० । ४. प्राचीन प्रतिमें 'एके' यह पाठ खण्डित है । ५. प्राचीन प्रतिमें 'ऽद्धा' यह पाठ नहीं है । ६. प्रा० पा०—मनवस्थानस्य योगिनः शठ० । ७. प्रा० पा०—संगच्छन्ति । ८. प्रा० पा०—कोऽत्र तद्बुधः । ९. प्राचीन प्रतिमें 'ऽपि' यह पाठ नहीं है । १०. प्रा० पा०—जडवदवधूतभाषा० । ११. प्रा० पा०—भावेनानुवीक्ष० । १२. प्रा० पा०—योगमायावासेन । १३. प्रा० पा०—कौङ्कवेङ्क० । १४. प्राचीन प्रतिमें 'श्म' यह अंश खण्डित है । १५. प्रा० पा०—वेणुनिघर्ष० । १६. प्राचीन प्रतिमें 'कुटकानां' यह पाठ खण्डित है । १७. प्रा० पा०—येनेह वाव । १८. प्रा० पा०—यज्ञलोकपुरुषविदूषकाः । १९. प्रा० पा०—तथैव ह्यर्वाक्तनया । २०. प्रा० पा०—तथैवातत्त्व शास्तम० । २१. प्राचीन प्रतिमें 'स्वयमेव' यह पाठ नहीं है । २२. प्राचीन प्रतिमें 'ति' यह पाठ खण्डित है ।

अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः[1] १२ तस्यानुगुणान् श्लोकान् गायन्ति—

अहो भुवः सप्तसमुद्रवत्या
द्वीपेषु वर्षेष्वधिपुण्यमेतत्[2] ।
गायन्ति यत्रत्यजना मुरारेः
कर्माणि भद्राण्यवतारवन्ति ॥१३॥
अहो नु वंशो यशसावदातः
प्रैयव्रतो यत्र पुमान् पुराणः ।
कृतावतारः पुरुषः स आद्यः
चचार धर्मं यदकर्महेतुम् ॥१४॥
को न्वस्य[3] काष्ठामपरोऽनुगच्छे-
न्मनोरथेनाप्यभवस्य योगी ।
यो योगमायाः स्पृहयत्युदस्ता
ह्यसत्तया येन कृतप्रयत्नाः ॥१५॥

इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितमीरितं[4] पुंसां समस्तदुश्चरिताभिहरणं परममहामङ्गलायनमिदमनुश्रद्धयोपचितयानुशृणोत्याश्रावयति वावहितो[5] भगवति तस्मिन् वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्तते ॥१६॥ यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते[6] भगवदीयत्वेनैव[7] परिसमाप्तसर्वार्थाः ॥ १७ ॥

राजन् पतिर्गुरुरलं भवतां यदूनां
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्वेवमङ्ग भगवान् भजतां मुकुन्दो
मुक्तिं ददाति कर्हिचित्[8]स्म न भक्तियोगम् १८
नित्यानुभूतनिजलाभनिवृत्ततृष्णः
श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ।
लोकस्य यः करुणयाभयमात्मलोक-
माख्यान्नमो भगवते ऋषभाय तस्मै ॥१९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे ऋषभदेवानुचरिते षष्ठोऽध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः

*श्रीशुक उवाच*[10]

भरतस्तु महाभागवतो यदा भगवतावनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥ १ ॥ तस्यामु ह वा आत्मजान् कात्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥ सुमतिं राष्ट्रभृतं सुदर्शनमावरणं[11] धूम्रकेतुमिति । अजनाभं[12] नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ॥ ३ ॥ स[13] बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया[14] स्वे स्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् ॥ ४ ॥ ईजे च भगवन्तं यज्ञक्रतुरूपं[15] क्रतुभिरुच्चावचैः श्रद्धयाऽऽहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥ ५ ॥ सम्प्रचरत्सु नानायागेषु[16]

१. प्रा० पा०—शिक्षणार्थे । २. प्राचीन प्रतिमें 'एतत्' यह अंश खण्डित है । ३. प्रा० पा०—को ह्रस्य । ४. प्रा० पा०—विशुद्धाचरितं पुंसां० । ५. प्रा० पा०—वावहितस्तस्मिन् वासुदेव । ६. प्रा० पा०—नैवाद्रियन्ते । ७. प्रा० पा०—भगवच्चस्त्वेनैव । ८. प्राचीन प्रतिमें 'चित्' यह पाठ खण्डित है । ९. प्राचीन प्रतिमें 'त' यह अंश खण्डित है । १०. प्राचीन प्रतिमें 'श्रीशुक उवाच' यह पाठ नहीं है । ११. प्रा० पा०—सुदर्शनं वावरणं । १२. प्राचीन प्रतिमें [illegible] यह पाठ खण्डित है । १३. प्रा० पा०—स ह बहुविन्महीपतिः । १४. प्राचीन प्रतिमें 'मह' यह पाठ नहीं

विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एवं भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान् पुरुषावयवेष्वभ्यध्यायत् ॥ ६ ॥ एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे[3] श्रीवत्सकौस्तुभवनमालारिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाजायत ॥ ७ ॥

एवं वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरो[5]ऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपै[6]तामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात्स्वनिकेतात् पुलहाश्रमं प्रवव्राज ॥ ८ ॥ यत्र ह वाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन संनिधाप्यत इच्छारूपेण ॥ ९ ॥ यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ १० ॥

तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप ॥ ११ ॥ तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन [10]एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ १२ ॥ इत्थं धृतभगवद्व्रत[11]ऐणेयाजिनवाससानुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु होवाच—॥ १३ ॥

परोरजः सवितुर्जातवेदो
　देवस्य भर्गो मनसेदं जजान ।
सु[12]रेतसादः पुनराविश्य चष्टे
　हं[13]सं गृध्राणं नृषद्रिङ्गिरामिमः ॥ १४ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे
भरतचरिते भगवत्परिचर्यायां सप्तमोऽध्यायः ॥ ७ ॥

## अथाष्टमोऽध्यायः

*श्रीशुक उवाच*

एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकान्त[14] उपविवेश ॥ १ ॥ तत्र तदा राजन् हरिणी पिपासया जलाशया[15]भ्याशमेकैवोपजगाम ॥ २ ॥ तया पे[16]पीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत् ॥ ३ ॥ तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभि-

१. प्रा० पा०—एवम् । २. प्रा० पा०—कर्मविशुद्धिः सत्त्वस्यान्तर्हृदयाका० । ३. प्राचीन प्रतिमें 'णे' यह अंश खण्डित है । ४. प्रा० पा०—विराजमान० । ५. प्रा० पा०—वसरो विभुज्यमानं तनयेभ्यः पितृ० । ६. प्राचीन प्रतिमें 'पै' यह अंश खण्डित है । ७. प्रा० पा०—पुलहाश्रममेष प्र० । ८. प्राचीन प्रतिमें 'प्य' यह अंश खण्डित है । ९. प्रा० पा०—तस्मिन्नेव वाव किल स एव आश्रमोपवने । १०. प्राचीन प्रतिमें 'एवं' यह पाठ नहीं हैं । ११. प्राचीन प्रतिमें 'ऐणेयाजिनवास०…'से आरम्भकर 'तिष्ठन्नेतदु होवाच' पर्यन्त अंश छूट गया है । १२. प्रा० पा०—स्वतेजसादः पुनरा० । १३. प्राचीन प्रतिमें 'हंसं' यह पाठ खण्डित है । १४. प्रा० पा०—मुदकान्तम् । १५. प्राचीन प्रतिमें 'श' यह अंश खण्डित है । १६. प्रा० पा० –तया पीयमान उदके ।

निवेशन्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात् सहसैवोच्चक्राम ॥ ४ ॥

तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो योनिर्निर्गतो[1] गर्भः स्रोतसि निपपात ॥ ५ ॥ तत्प्रसवोत्सर्पणभयखेदातुरा[2] स्वगणेन वियुज्यमाना कस्याञ्चिद्दर्यां कृष्णसारसती निर्पपाताथ[3] च ममार ॥ ६ ॥

तं त्वेणकुणकं कृपणं स्रोतसानूह्यमानमभिवीक्ष्यापविद्धं बन्धुरिवानुकम्पया[4] राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् ॥ ७ ॥ तस्य ह वा एणकुणक उच्चैरेतस्मिन् कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ८ ॥ अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः[5][6] परिवर्जितः शरणं च[7] मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन् यौथिकांश्चैवोपेयाय[8] नान्यं कञ्चन वेद मय्यतिविस्रब्धश्चात[9][10] एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनानुष्ठेयं शरण्योपेक्षा दोषविदुषा ॥ ९ ॥ नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षन्ते ॥ १० ॥

इति कृतानुषङ्ग आसनशयनाटनस्थाना[11]शनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ॥ ११ ॥ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो[12] भयमाशंसमानो यदा सह हरिणकुणकेन वनं समाविशति[13] ॥ १२ ॥ पथिषु च मुग्धभावेन[14] तत्र तत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कन्धेनोद्वहति एवमुत्सङ्ग उरसि चाधायोपलालयन्मुदं परमामवाप॥१३॥ क्रियायां निर्वर्त्यमानायामन्तरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्ताद्वत्स ते सर्वत इति ॥ १४ ॥

अन्यदा भृशमुद्विग्नमना[15] नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसन्तापस्तमेवानुशोचन् किल कश्मलं महदभिरम्भित इति होवाच ॥ १५॥ अपि बत स वै कृपण एणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृतसुकृतस्य[16] कृतविस्रम्भ आत्मप्रत्ययेन तदविगणयन् सुजन[17] इवागमिष्यति ॥१६॥ अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि[18] चरन्तं देवगुप्तं द्रक्ष्यामि ॥१७॥ अपि च[19] न वृकः सालावृकोऽन्यतमो वा नैकचरं[20] एकचरो वा भक्षयति ॥१८॥ निम्लोचति[21] ह भगवान् सकलजगत्क्षेमोदयस्त्रय्यात्माद्यापि मम न मृगवधून्यास आगच्छति ॥१९॥ अपिस्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसन्तोषं स्वानामपनुदन्॥२०॥ क्ष्वेलिकायां मां मृषासमाधिनाऽऽमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य[22] पृषदपरुषविषाणाग्रेण लुठति ॥ २१ ॥ आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरास[23] ऋषिकुमारवदवहितकरणकलाप आस्ते ॥ २२ ॥

१. प्राचीन प्रति 'योनिनिर्गतः' यह पाठ नहीं है। २. प्राचीन प्रतिमें 'तत्प्रसव' यह अंश नहीं है। ३. प्रा० पा०—पपाताथ च। ४. प्रा० पा०—रिवानुकम्पितया। ५. प्राचीन प्रतिमें 'स्व' यह पाठ नहीं है। ६. प्रा० पा०—सुहृद्बन्धुभिः। ७. प्रा० पा०—शरणं ममोपसादितो। ८. प्राचीन प्रतिमें 'याय' यह अंश खण्डित है। ९. प्राचीन प्रतिमें 'मय्य' यह अंश खण्डित है। १०. प्रा० पा०—मय्यधिश्रब्ध एवं। ११. प्रा० पा०—नाटनकुसुमकुशाशनादिषु सह मृगजातिना। १२. प्रा० पा०—वृकशा०। १३. प्रा० पा०—समाविशत्। १४. प्रा० पा०—शुद्धभावेन। १५. प्रा० पा०—तु भृश०। १६. प्रा० पा०—शठकितवमतेरकृतसुकृतस्य। १७. प्रा० पा०—स्वजन इवा०। १८. प्रा० पा०—सस्यानि। १९. प्रा० पा०—अपि न वृकः शालावृको वा। २०. प्रा० पा०—नैकचरो वा भक्षयति। २१. प्रा० पा०—निम्लोचयति। २२. प्रा० पा०—आवृत्य। २३. प्रा० पा०—सपद्युपरतराग।

किं वा अरे आचरितं तपस्तपस्विन्यानया यदियमवनिः सविनयकृष्णसारतनयतनुतरसुभगशिवतमाखरखुरपदपङ्क्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मर्म द्रविणपदवीं सूचयन्त्यात्मानं च सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति॥२३॥ अपिस्विदसौ भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं मृगबालकं स्वाश्रमपरिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपाति ॥२४॥ किं वाऽऽत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं मामुपसृतमृगीतनयं शिशिरशान्तानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयतीति च[१] ॥२५॥

एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥२६॥ तदानीमपि पार्श्ववर्तिनमात्मजमिवानुशोचन्तमभिवीक्षमाणो मृगएवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु[३] न मृतजन्मानुस्मृतिरि[४]तरवन्मृगशरीरमवाप ॥२७॥ तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥२८॥ अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसङ्गस्य विविक्तपुण्यारण्यशरणस्यात्मवत आ[५]त्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमननसङ्कीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलया[६]मेन कालेन समावेशितं समाहितं कार्त्स्न्येन मनस्तत्तु पुनर्ममाबुधस्यारान्मृगसुतमनु परिसुस्राव ॥२९॥

इत्येवं निगूँढ[७]निर्वेदो विसृज्य मृगीं मातरं पुनर्भगवत्क्षेत्रमुपशमशीलमु[८]निगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम ॥३०॥ तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृणवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे भरतचरितेऽष्टमोऽध्यायः[९] ॥ ८ ॥

# अथ नवमोऽध्यायः

*श्रीशुक उवाच*

अथ कस्यचिद् द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषतितिक्षाप्रश्रयविद्यानसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥ यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥ २ ॥ तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो[१०] भगवतः कर्मबन्धविध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदधदात्मनः प्रतिघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्त[११]-

१. प्रा० पा०—मे। २. प्राचीन प्रतिमें 'च' यह पाठ नहीं है। ३. प्रा० पा०—कलेवरं न नु मृतजन्मा०। ४. प्राचीन प्रतिमें 'रि' यह पाठ खण्डित है। ५. प्राचीन प्रतिमें 'आ' यह अंश खण्डित है। ६. प्रा० पा०—सकलकालेन। ७. प्रा० पा०—निरूढनिर्वेदो। ८. प्रा० पा०—मुनिगणार्चितं दयितं। ९. प्रा० पा०—पञ्चमे स्कन्धे आदिभरतचरितेऽष्ट०। १०. प्राचीन प्रतिमें 'भृशमुद्विजमानो' यह पाठ छूट गया है। ११. प्रा० पा०—मत्तजडबधिरस्वरूपेण।

जडान्धबधिरस्वरूपेण दर्शयामास लोकस्य ॥ ३ ॥

तस्यापि ह वा आत्मजस्यं विप्रः पुत्रस्नेहानुबद्धमना आ समावर्तनात्संस्कारान् यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन् कर्मनियमाननभिप्रेतानपि समशिक्षयदनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति ॥ ४ ॥ स चापि तदु ह पितृसंनिधावेवा सध्रीचीनमिव स्म करोति छन्दांस्यध्यापयिष्यन् सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥

एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावद् अनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एवं प्रमत्त उपसंहृतः ॥ ६ ॥ अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात् ॥ ७ ॥

पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त ॥ ८ ॥ स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च स कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादितमल्पं बहु मृष्टं कदन्नं वाभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम् । नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावितदेहाभिमानः ॥ ९ ॥ शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञयातज्ज्ञजनावमतो विचचार ॥ १० ॥ यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति किन्तु न समं विषमं न्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति ॥ ११ ॥

अथ कदाचित्कश्चिद् वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥ तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये तमसाऽऽवृतायामनधिगतपशव आकस्मिकेन विधिना केदारान् वीरासनेन मृगवराहादिभ्यः संरक्षमाणमङ्गिरःप्रवर सुतमपश्यन् ॥ १३ ॥ अथ त एनमनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपनिन्युर्मुदा विकसितवदनाः ॥ १४ ॥

अथ पणयस्तं स्वविधिनाभिषिच्याहतेन वाससाऽऽच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदङ्गपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः ॥ १५ ॥ अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितमसिमतिकरालनिशितमुपाददे ॥ १६ ॥

इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजउत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसा-

---

१. प्रा० पा०—आत्मजस्य स विप्रः । २. प्राचीन प्रतिमें 'कान्' यह पाठ खण्डित है । ३. प्रा० पा०—स्वयं गृहे प्रमत्त । ४. प्रा० पा०—निर्बन्धान्न्यवृत्स्यन्त । ५. प्रा० पा०—नित्यवृत्तिनिमित्त० । ६. प्रा० पा०—इवापावृताङ्गः । ७. प्रा० पा०—बन्धुरितिसंज्ञोऽतज्ज्ञ० । ८. प्रा० पा०—वेतन ईहमानः । ९. प्राचीन प्रतिमें 'र्म' यह अंश खण्डित है । १०. प्रा० पा०—भद्रकाल्यै पशुमालभता । ११. प्राचीन प्रतिमें 'नि' यह अंश खण्डित है । १२. प्रा० पा०—लाजा० । १३. प्रा० पा०—च तं पुरुष० । १४. प्रा० पा०—मालमनं ।

तिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट[1] सैव देवी भद्रकाली ॥ १७ ॥ भृशममर्षरोषावेश-रभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपाति-भयानकवदना हन्तुकामेवेदं[3] महाट्टहासमति-संरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात्स्रवन्तमसृगासव-मत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त च[6] विजहार च शिरःकन्दुक-लीलया ॥ १८ ॥ एवमेवं[7] खलु महदभिचाराति-क्रमः कार्त्स्न्येनात्मने[8] फलति ॥ १९ ॥ न वा एतद्विष्णुदत्त महदद्भुतं यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां[10] सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवता-निमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः[11] परिरक्ष्य-माणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां[12] भागवत-परमहंसानाम् ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे
जडभरतचरिते नवमोऽध्यायः ॥ ९ ॥

# अथ दशमोऽध्यायः

*श्रीशुक उवाच*

अथ सिन्धुसौवीरपते[13] रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाह[14]पुरुषान्वेषण[15]-समये दैवेनोपसादितः[16] स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्व-विष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह[17] उवाह शिबिकां स महानुभावः ॥ १ ॥

यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥

अथ तं[18] ईश्वरवचः सोपालम्भमुपाकर्ण्योपाय-तुरीयाच्छङ्कितमनसस्तं विज्ञापयांबभूवुः ॥ ३ ॥ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः । अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमु[19] ह वयं पारयाम इति ॥ ४ ॥

सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां[20] भवितुमर्हतीति[21] निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासित-वृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थित-मन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसाऽऽवृत-मतिराह ॥ ५ ॥ अहो कष्टं भ्रातर्व्यक्तमुरु परिश्रान्तो दीर्घमध्वानमेक[22] एव ऊहिवान् सुचिरं नातिपीवा न संहननाङ्गो जरसा चोपद्रुतो[23] भवान् सखे नो एवापर एते सङ्घट्टिन इति बहु विप्रलब्धोऽप्यविद्यया रचित-

१. प्रा० पा०—सहसोत्थाप्य बाढं । २. प्रा० पा०—नृशंसामर्षरोषावेशसमुत्थभ्रुकुटि० । ३. प्रा० पा०—हन्तुकामैवेदं । ४. प्रा० पा०—महाट्टहाससंरम्भेण । ५. प्रा० पा०—वृषलानां । ६. प्रा० पा०—ननर्त विजहार च । ७. प्रा० पा०—एवं खलु । ८. प्रा० पा०—नात्मनि फलति । ९. प्रा० पा०—एवं विष्णुदत्त । १०. प्रा० पा०—देहाध्यात्मभाव० । ११. प्रा० पा०—तैस्तैर्भावैरभिरक्ष्यमाणानां । १२. प्रा० पा०—मकुतश्चनभयमुप० । १३. प्रा० पा०—सिन्धुपते । १४. प्रा० पा०—शिबिकावाहक० । १५. प्रा० पा०—पुरुषान्वेषसमये । १६. प्रा० पा०—यावान् संहननाङ्गो । १७. प्रा० पा०—मतदर्हेण० । १८. प्रा० पा०—अथ ईश्वरवचः । १९. प्रा० पा०—वोढुं वयं । २०. प्रा० पा०—संसर्गिणां । २१. प्रा० पा०—भवितुमर्हतीति निशम्य । २२. प्राचीन प्रतिमें 'नमेक एव' इतना अंश खण्डित है। २३. प्रा० पा०—जरसा द्रुतो भवान् सुखिनो ये वापर ।

द्रव्यगुणकर्माशय[1]स्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहं ममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह ॥ ६ ॥

अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां[2] दण्डपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यस इति ॥ ७ ॥

एवं बह्वबद्ध[3]मपि भाषमाणं नरदेवाभिमानं रजसा तमसानु[4]विद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥ ८ ॥

*ब्राह्मण उवाच*

त्वयोदितं व्यक्तमविप्रलब्धं
भर्तुः स मे स्याद्यदि वीर भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा
पीवेति राशौ न विदां प्रवादः ॥ ९ ॥

स्थौल्यं कार्श्यं व्याधय आधयश्च
क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्रा रतिर्मन्युरहंमदः शुचो
देहेन जातस्य हि मे न सन्ति ॥१०॥

जीवन्मृतत्वं नियमेन राजन्
आद्यन्तवद्यद्विकृतस्य दृष्टम् ।
स्वस्वाम्यभावो ध्रुव ईड्य यत्र
तर्ह्युच्यतेऽसौ विधिकृत्ययोगः ॥११॥

विशेषबुद्धेर्विवरं मनाक् च
पश्याम यन्न व्यवहारतोऽन्यत् ।
क ईश्वरस्तत्र किमीशितव्यं
तथापि राजन् करवाम किं ते ॥१२॥

उन्मत्तमत्तजडवत्स्वसंस्थां[6]
गतस्य मे वीर चिकित्सितेन ।
अर्थः[7] कियान् भवता शिक्षितेन
स्तब्धप्रमत्तस्य च पिष्टपेषः ॥१३॥

*श्रीशुक उवाच*

एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर[8] उपशमशील उपरतानात्म्यनिमित्त उपभोगेन[9] कर्मारब्धं व्यपनयन् राजयानमपि तथोवाह ॥१४॥ स चापि पाण्डवेय सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक्श्रद्धयाधिकृताधिकारस्तद्धृदयग्रन्थिमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसम्मतं त्वरयावरुह्य शिरसा पादमूलमुपसृतः क्षमापयन् विगतनृपदेवस्मय उवाच ॥ १५ ॥

कस्त्वं निगूढश्चरसि द्विजानां
बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुत्रत्य इहापि कस्मात्
क्षेमाय नश्चेदसि नोत[10] शुक्लः ॥१६॥

नाहं विशङ्के सुरराजवज्रा-
न्न त्र्यक्षशूलान्न यमस्य दण्डात् ।
नाग्न्यर्कसोमानिलवित्तपास्त्रा-
च्छङ्के भृशं ब्रह्मकुलावमानात् ॥१७॥

तद् ब्रूह्यसङ्गो जडवन्निगूढ-
विज्ञानवीर्यो विचरस्यपारः[11] ।
वचांसि योगग्रथितानि साधो
न नः क्षमन्ते मनसापि भेत्तुम् ॥१८॥

अहं च योगेश्वरमात्मतत्त्व-
विदां मुनीनां परमं गुरुं वै ।
प्रष्टुं प्रवृत्तः किमिहारणं तत्
साक्षाद्धरिं ज्ञानकलावतीर्णम् ॥१९॥

स[12] वै भवाँल्लोकनिरीक्षणार्थ-
मव्यक्तलिङ्गो विचरत्यपिस्वित् ।

---

१. प्रा० पा०—कर्मातिशय० । २. प्रा० पा०—चिकित्सां तव दण्ड० । ३. प्रा० पा०—मभिभाषमाणं । ४. प्रा० पा०—तमसानुवृद्धेन । ५. प्राचीन प्रतिमें 'आधयश्च' इतना पाठ छूट गया है । ६. प्रा० पा०—जडवत्स्वस्वसंस्थां । ७. प्रा० पा०—अथ कियान्भवता । ८. प्रा० पा०—स मुनिवरः । ९. प्रा० पा०—निमित्तमुपभोगेन । १०. प्रा० पा०—नोऽत्र । ११. प्राचीन प्रतिमें 'विचरस्यपारः……'से आरम्भकर 'साक्षाद्धरिं' यहाँतकका अंश खण्डित है । १२. प्राचीन प्रतिमें 'स वै' यह पाठ छूट गया है ।

योगेश्वराणां गतिमन्धबुद्धिः
कथं विचक्षीत गृहानुबन्धः ॥२०॥
दृष्टः श्रमः कर्मत आत्मनो वै
भर्तुर्गन्तुर्भवतश्चानुमन्ये ।
यथासतोदानयनाद्यभावात्
समूल इष्टो व्यवहारमार्गः ॥२१॥
स्थाल्यग्नितापात्पयसोऽभिताप-
स्तत्तापतस्तण्डुलगर्भरन्धिः ।
देहेन्द्रियास्वाशयसन्निकर्षात्
तत्संसृतिः पुरुषस्यानुरोधात् ॥२२॥
शास्ताभिगोप्ता नृपतिः प्रजानां
यः किङ्करो वै न पिनष्टि पिष्टम् ।
स्वधर्ममाराधनमच्युतस्य
यदीहमानो विजहात्यघौघम् ॥२३॥
तन्मे भवान्नरदेवाभिमान-
मदेन तुच्छीकृतसत्तमस्य ।
कृषीष्ट मैत्रीदृशमार्तबन्धो
यथा तरे सदवध्यानमंहः ॥२४॥
न विक्रिया विश्वसुहृत्सखस्य
साम्येन वीताभिमतेस्तवापि ।
महद्विमानात् स्वकृताद्धि मादृङ्
नङ्क्ष्यत्यदूरादपि शूलपाणिः ॥२५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः

*ब्राह्मण उवाच*

अकोविदः कोविदवादवादान्
वदस्यथो नातिविदां वरिष्ठः ।
न सूरयो हि व्यवहारमेनं
तत्त्वावमर्शेन सहामनन्ति ॥ १ ॥
तथैव राजन्नुरुगार्हमेध-
वितानविद्योरुविजृम्भितेषु ।
न वेदवादेषु हि तत्त्ववादः
प्रायेण शुद्धो नु चकास्ति साधुः ॥२॥
न तस्य तत्त्वग्रहणाय साक्षाद्
वरीयसीरपि वाचः समासन् ।
स्वप्ने निरुक्त्या गृहमेधिसौख्यं
न यस्य हेयानुमितं स्वयं स्यात् ॥ ३ ॥
यावन्मनो रजसा पूरुषस्य
सत्त्वेन वा तमसा वानुरुद्धम् ।
चेतोभिराकूतिभिरातनोति
निरङ्कुशं कुशलं चेतरं वा ॥ ४ ॥
स वासनात्मा विषयोपरक्तो
गुणप्रवाहो विकृतः षोडशात्मा ।
बिभ्रत्पृथङ्नामभि रूपभेद-
मन्तर्बहिष्ट्वं च पुरैस्तनोति ॥ ५ ॥
दुःखं सुखं व्यतिरिक्तं च तीव्रं
कालोपपन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा
स्वदेहिनं संसृतिचक्रकूटः ॥ ६ ॥
तावानयं व्यवहारः सदाविः
क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ।
तस्मान्मनो लिङ्गमदो वदन्ति
गुणागुणत्वस्य परावरस्य ॥ ७ ॥
गुणानुरक्तं व्यसनाय जन्तोः

१. प्रा० पा०—भर्तुर्गुरोर्भवत० । २. प्रा० पा०—सुकृताद्धि । ३. प्रा० पा०—जडचरितेदशमो० । ४. प्रा० पा०—नात्मविदांवरिष्ठः । ५. प्रा० पा०—व्यवहारमेतं । ६. प्रा० पा०—गरीयसीरपि । ७. प्रा० पा०—व्यवहारो यः सदाशिवः । ८. प्रा० पा०—गुणागुणत्वञ्च ।

क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्तिमश्नन्
शिखाः सधूमा भजति ह्यन्यदा[1] स्वम् ।
पदं तथा गुणकर्मानुबद्धं
वृत्तीर्मनः[2] श्रयतेऽन्यत्र तत्त्वम् ॥ ८ ॥
एकादशासन्मनसो[3] हि वृत्तय
आकूतयः पञ्च धियोऽभिमानः[4] ।
मात्राणि कर्माणि पुरं च तासां
वदन्ति हैकादश वीर[5] भूमीः ॥ ९ ॥
गन्धाकृतिस्पर्शरसश्रवांसि
विसर्गरत्यर्त्यभिजल्पशिल्पाः ।
एकादशं स्वीकरणं ममेति
शय्यामहं द्वादशमेक आहुः ॥१०॥
द्रव्यस्वभावाशयकर्मकालै-
रेकादशामी मनसो विकाराः ।
सहस्रशः शतशः कोटिशश्च
क्षेत्रज्ञतो न मिथो न स्वतः स्युः ॥११॥
क्षेत्रज्ञ एता मनसो विभूती-
र्जीवस्य मायारचितस्य नित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च
शुद्धो विचष्टे ह्यविशुद्धकर्तुः ॥१२॥
क्षेत्रज्ञ आत्मा पुरुषः पुराणः
साक्षात्स्वयंज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः
स्वमाययाऽऽत्मन्यवधीयमानः ॥१३॥
यथानिलः स्थावरजङ्गमाना-
मात्मस्वरूपेण निविष्ट ईशेत् ।
एवं परो भगवान् वासुदेवः
क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥१४॥
न यावदेतां तनुभृन्नरेन्द्र
विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नो
वेदात्मतत्त्वं भ्रमतीह तावत् ॥१५॥
न यावदेतन्मन आत्मलिङ्गं
संसारतापावपनं जनस्य ।
यच्छोकमोहामयरागलोभ-
वैरानुबन्धं ममतां विधत्ते ॥१६॥
भ्रातृव्यमेनं तददभ्रवीर्य-
मुपेक्षयाध्येधितमप्रमत्तः[6] ।
गुरोर्हरेश्चरणोपासनास्त्रो
जहि व्यलीकं स्वयमात्ममोषम् ॥१७॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे ब्राह्मणरहूगण-संवादे एकादशोऽध्यायः ॥ ११ ॥

# अथ द्वादशोऽध्यायः

*रहूगण[7] उवाच*

नमो नमः कारणविग्रहाय
स्वरूपतुच्छीकृतविग्रहाय ।
नमोऽवधूत द्विजबन्धुलिङ्ग-
निगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥
ज्वरामयार्तस्य यथागदं सत्
निदाघदग्धस्य यथा हिमाम्भः ।
कुदेहमानाहिविदष्टदृष्टेः
ब्रह्मन् वचस्तेऽमृतमौषधं मे ॥ २ ॥
तस्माद्भवन्तं मम संशयार्थं
प्रक्ष्यामि पश्चादधुना सुबोधम् ।

१. प्रा० पा०—भजति ह्यन्यथा। २. प्रा० पा०—कर्मानुबद्धे मूर्तीर्मनः। ३. प्रा० पा०—मनसस्तु वृत्तयः। ४. प्रा० पा०—धियोऽभिमानाः। ५. प्राचीन प्रतिमें—'वीर' यह पाठ खण्डित है। ६. प्रा० पा०—धितमप्रवृत्तः। ७. प्रा० पा०—राहुगण उवाच।

अध्यात्मयोगग्रथितं तवोक्त-
माख्याहि कौतूहलचेतसो मे ॥ ३ ॥
यदाह योगेश्वर दृश्यमानं
क्रियाफलं सद्व्यवहारमूलम् ।
न ह्यञ्जसा तत्त्वविमर्शनाय
भवानमुष्मिन् भ्रमते मनो मे ॥ ४ ॥

*ब्राह्मण उवाच*

अयं जनो नाम चलन् पृथिव्यां
यः पार्थिवः पार्थिव कस्य हेतोः ।
तस्यापि चाङ्घ्र्योरधि गुल्फजङ्घा-
जानूरुमध्योरशिरोधरांसाः ॥ ५ ॥
अंसेऽधि दार्वी शिबिका च[2] यस्यां
सौवीरराजेत्यपदेश आस्ते ।
यस्मिन्[3] भवान् रूढनिजाभिमानो
राजास्मि सिन्धुष्विति दुर्मदान्धः ॥ ६ ॥
शोच्यानिमांस्त्वमधिकष्टदीनान्
विष्टया निगृह्णन्निरनुग्रहोऽसि ।
जनस्य गोप्तास्मि विकत्थमानो
न शोभसे वृद्धसभासु धृष्टः[4] ॥ ७ ॥
यदा क्षितावेव[5] चराचरस्य
विदाम निष्ठां प्रभवं च नित्यम्[6] ।
तन्नामतोऽन्यद् व्यवहारमूलं
निरूप्यतां सत् क्रिययानुमेयम् ॥ ८ ॥
एवं निरुक्तं क्षितिशब्दवृत्त-
मसन्निधानात्परमाणवो[7] ये ।
अविद्यया मनसा कल्पितास्ते
येषां समूहेन[8] कृतो विशेषः ॥ ९ ॥

एवं कृशं स्थूलमणुर्बृहद्यद्
असच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्म-
नाम्नाजयावेहि कृतं द्वितीयम् ॥१०॥
ज्ञानं विशुद्धं परमार्थमेक-
मनन्तरं त्वबहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं
यद्वासुदेवं कवयो वदन्ति ॥११॥
रहूगणैतत्तपसा[9] न याति
न चेज्यया निर्वपणाद् गृहाद्वा ।
नच्छन्दसा नैव जलाग्निसूर्यै-
र्विना महत्पादरजोऽभिषेकम् ॥१२॥
यत्रोत्तमश्लोकगुणानुवादः
प्रस्तूयते[10] ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षो-
र्मतिं सतीं यच्छति वासुदेवे ॥१३॥
अहं पुरा भरतो नाम राजा
विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानो
मृगोऽभवं मृगसङ्गाद्धतार्थः ॥१४॥
सा मां स्मृतिर्मृगदेहेऽपि वीर
कृष्णार्चनप्रभवा नो जहाति ।
अथो अहं जनसङ्गादसङ्गो
विशङ्कमानोऽविवृतश्चरामि ॥१५॥
तस्मान्नरोऽसङ्गसुसङ्गजात-
ज्ञानासिनेहैव विवृक्णमोहः ।
हरिं तदीहाकथनश्रुताभ्यां
लब्धस्मृतिर्यात्यतिपारमध्वनः ॥१६॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां पञ्चमस्कन्धे ब्राह्मण-
रहूगणसंवादे द्वादशोऽध्यायः ॥ १२ ॥

---

१. प्रा० पा०—कश्चन कस्य । २. प्रा० पा०—शिबिका यस्यां । ३. प्रा० पा०—तस्मिन् । ४. प्रा० पा०—दुष्टः । ५. प्रा० पा०—यदा दुःखितावेव । ६. प्राचीन प्रतिमें 'नित्यम्' यह पाठ खण्डित है । ७. प्रा० पा०—परमाणवोऽथ ये । ८. प्रा० पा०—कल्पितास्ते समूहेन । ९. प्रा० पा०—राहुगणैतत्तपसा । १०. प्राचीन प्रतिमें 'णोऽनुदिनं मुमुक्षोर्मतिं······' से आरम्भ कर 'विशङ्कमानो' पर्यन्त पाठ खण्डित हो गया है ।

